तस्मिन् दिव्यानि कार्याणि वैश्वदेवमथानलम् ।
प्राजापत्यं च यत्कर्म सर्वमत्र प्रयोजयेत् ।।
इत्येतानि निवद्धानि ध्रुवाणि करणानि च ।
अतः परं प्रवक्ष्यामि बवान्यन्यानि सप्त वै ।।
बवं च बालवं चैव कौलवं तैतिलं तथा ।
गराख्यं वणिजं चैव विष्टिर्ज्ञेया तु सप्तमी ।।
बवे तु ध्रुवकर्माणि क्षिप्राण्यपि च कारयेत् ।
निर्याणे च प्रवेशे च तद्धि सर्वार्थसाधकम् ।।
बालवं ब्राह्मणानां तु सर्वारम्भेषु शस्यते ।
अनारम्भोऽत्र वर्णानां शेषाणामिति निश्चयः ।।
मित्रयुक्तं च यत्कर्म यच्च स्यात् सिद्धिकारणम् ।
स्थावराणि च सर्वाणि कौलवे सम्प्रयोजयेत् ।।
तैतिलेन च कर्तव्यं राजद्वारिकमेव यत् ।
अलङ्कारांश्च विविधान् सर्वाधिकरणानि च ।।
गरादिना च कर्तव्यं कर्म गृहसमुद्भवम् ।
कृषि प्रवेशं वस्तूनां ग्रहणं क्षेत्रकर्मणाम् ।।
सर्वकार्याणि वणिजि विवादोत्थानि कारयेत् ।
पण्यविक्रयणं चैव शस्त्रारम्भं च कारयेत् ।।
विष्टिर्नामेह करणं येन कर्म न कारयेत् ।
यत्नेनापि कृतं कर्म भवत्यल्पफलोदयम् ।।

The metre is शार्दूलविक्रीडित; so is that of 7 and 8. In the next verse the author gives auspicious planetary positions for boring the ear-lobes.]

**लाभे तृतीये च शुभैः समेते पापैर्विहीने शुभराशिलग्ने ।**
**वेध्यौ च कर्णावमरेज्यलग्ने पुष्येन्दुचित्राहरिपौष्णभेषु ।। ६ ।।**

When benefics are posited in the 11th and the 3rd houses, when an auspicious sign (owned by benefic) is rising and is free from malefics, and Jupiter is in the Ascendant, the boring of the ear-lobes may be done, provided the Moon is posited in any one of the following asterisms: Puṣya, Mṛgaśiras, Citrā, Śravaṇa and Revatī.

[The auspicious signs are Taurus, Gemini, Virgo, Libra, Sagittarius, Pisces and Cancer (when the Moon is waxing). The metre is इन्द्रवज्रा.]

**रोहिण्युत्तररेवतीमृगशिरोमूलानुराधामघा-**
**हस्तस्वातिषु षष्ठतौलिमिथुनेषूद्यत्सु पाणिग्रहः ।**

सप्ताष्टान्त्यबहिःशुभैरुडुपतावेकादशद्वित्रिग
क्रूरैस्त्र्यायषडष्टगैर्न तु भृगौ षष्ठे कुजे चाष्टमे ॥ ७ ॥

दम्पत्योर्द्विनवाष्टराशिरहिते चारानुकूले रवौ
चन्द्रे चार्ककुजार्किशुक्रवियुते मध्येऽथवा पापयोः ।
त्यक्त्वा च व्यतिपातवैधृतिदिनं विष्टिं च रिक्तां तिथिं
क्रूराहायनपौषचैत्रविरहे लग्नांशके मानुषे ॥ ८ ॥

Marriage may be solemnized in any of the asterisms, Rohiṇī, the three Uttarās, Revatī, Mṛgaśiras, Mūla, Anurādhā, Maghā, Hasta and Svāti, when Gemini, Virgo or Libra is rising, when benefics are posited in houses other than the 7th, 8th, and 12th, when the Moon is in the 2nd, 3rd or 11th house from the ascendant, when the malefics are in the 3rd, 6th, 8th and 11th houses, when Venus is not in the 6th, and Mars not in the 8th. It should also be noted that the natal signs (Janma-rāśis) of the bride and the bride-groom are not 2nd and 12th, 5th and 9th, or 6th and 8th from the elected Moon's sign (i.e. they may be in opposition, 3rd and 11th the same Rāśi, or 4th and 10th), that the Sun for the bride-groom and the Moon for the bride are favourable in their transit, that the Moon is not in conjunction with the Sun, Mars, Saturn or Venus (she may be conjoined with Jupiter or Mercury or both), that she is not hemmed in between malefics, that the day chosen is free from Vyatipāta and Vaidhṛti yoga, Viṣṭi Karaṇa and Riktā Tithi; that the day is presided over by a benefic planet, that the season chosen is the northern solstice, that the month is any one but Caitra and Pauṣa, (even in the southern solstice the months of Kārttika and Mārgaśīrṣa are acceptable), and that the rising Navāṁśa is owned by a biped sign (Gemini, Virgo or Libra).

[Vide the following:—

हस्तोत्तरास्वातिमघानुराधाप्राजेशपौष्णैन्दवनैऋतेषु ।
उद्वाहसौभाग्यसुखानि कन्या प्राप्नोति शेषैः सुतभर्तृशोकम् ॥
कन्यातुलावन्मिथुनेषु साध्वी शेषेष्वसाध्वी धनवर्जिता च ।
अन्येषु भेषु द्विपदांश इष्टः कन्यादिलग्नेषु न चान्त्यभागः ॥
सौम्यान् व्ययास्तनिधनेष्वरिभे च शुक्रं
हित्वा स्थितस्त्रिधनलाभगतः शशाङ्कः ।
पापास्त्रिषड्निधनलाभगता विवाहे
हित्वाष्टमं क्षितिजमिष्टफलानि दद्युः ॥
त्रिकोणषष्ठाष्टधनव्ययेषु पापप्रदानं शुभमन्यभेषु ।

गोचरशुद्धाविन्दुं कन्याया यत्नतः शुभं वीक्ष्य ॥
तिग्मकिरणं च पुंसां शेषैरबलैरपि विवाहः ।
नान्यैः समेतः शुभकृच्छशाङ्कः केषाञ्चिदिष्टो बुधजीवयुक्तः ॥
मध्ये पापग्रहयोः पाणिग्रहणे शशी न सौख्यकरः ।
तस्माद्यत्नाच्चन्द्रः कन्यायाः सुस्थितो देयः ॥
न वै धृतिदिनं कुर्याद् व्यतीपातयुतेऽहनि ।
रिक्तासु च न कर्तव्यं न विष्टिदिवसे तथा ॥
आग्नेयग्रहवासरेषु कलहः प्रीतिस्तु सत्सूत्तमा ।
केचित्स्थैर्यमुशन्ति सौरदिवसे चन्द्रे ससापत्न्यकम् ॥
उत्तरां भजमानेन काष्ठां वै सप्तसप्तिना ।
चतुर्णामपि वर्णानां विवाहः श्रेष्ठ उच्यते ॥
माघफाल्गुनवैशाखा ऐन्द्रसौम्यानलास्तथा ।
षडेते पूजिता मासाश्चातुर्वर्ण्येऽपि नित्यशः ॥
एषूढा सुभगा साध्वी पुत्रिणी धर्मवत्सला ।
धनिनी देवभक्ता च यथासङ्ख्यं प्रकीर्तिता ॥
आषाढचैत्रपौषाश्च नभस्यः श्रावणस्तथा ।
कुत्सिताः सर्ववर्णानां विवाहेषु मनीषिभिः ॥
आषाढे नष्टशौचा तु खला सन्तानवर्जिता ।
वैशाखे सर्वसामान्या चैत्रे चातृप्तमैथुना ॥
पौषे भर्तृविहीना स्यान्नभस्येऽपि च दुर्भगा ।
एवमाश्वयुजोढा तु श्रावणे तु मृतप्रजा ॥
द्विपदभवनं प्राप्तो योंऽशः शुभोऽन्यगृहोदये ।
द्विपदभवनेष्वप्यन्यांशा भवन्त्यशुभावहाः ॥
विलग्नांशः स्वनाथेन यद्युद्वाहे न दृश्यते ।
पुंविनाशस्ततोऽस्तांशो यद्येवं योषितस्ततः ॥]

## नक्षत्रजातकाध्यायः ॥ १०१ ॥

*Chapter CI – Effects of Birth In the Asterisms*

This chapter is a mere repetition of XVI of the Bṛhad Jātaka.

प्रियभूषणः सुरूपः सुभगो दक्षोऽश्विनीषु मतिमांश्च ।
कृतनिश्चयसत्यारुग्दक्षः सुखितश्च भरणीषु ॥ १ ॥

One born under the asterism Aśvinī will be fond of ornaments, lovely in appearance, attractive or liked by all, efficient and intelligent. The asterism Bharaṇī makes one carry out one's determination, truthful, free from ill health, efficient and happy.

[The intellect has got eight functions as enunciated below:—

शुश्रूषा श्रवणं चैव ग्रहणं धारणं तथा ।
ऊहापोहार्थविज्ञानं तत्त्वज्ञानं च धीगुणाः ॥

Vide पराशर also:—

विज्ञानवानरोगो भिषक् प्रदातार्थभृत्यवनितेशः ।
दक्षः क्षितिपतिसेवी जातः स्यादाश्विने शूरः ॥
धीरः क्रूरोऽनृतवाक् परवित्तहरो नरश्चपलबुद्धिः ।
बहुशत्रुपुत्रभृत्यो याम्ये प्रियमांसमद्यश्च ॥

Thus, we see that the effects of both Aśvinī and Bharaṇī are quite good according to our author; but, according to Parāśara, Bharaṇī makes one cruel, untruthful, fickle-minded, a thief etc.]

बहुभुक्परदाररतस्तेजस्वी कृत्तिकासु विख्यातः ।
रोहिण्यां सत्यशुचिः प्रियंवदः स्थिरमतिः सुरूपश्च ॥ २ ॥

Birth under the asterism Kṛttikā makes one a glutton, addicted to others' wives, brilliant and famous. The person born under Rohiṇī will be truthful, pure, sweet-tongued, with a steady mind, and lovely in appearance.

[Sage पराशर gives a good certificate in the following verse to one born under Kṛttikā. The effects of Rohiṇī are a little better here:

धर्ममतिर्बहुवित्तः स्वाध्यायाभिजनरूपसम्पन्नः ।
अकृपणमतिः शशियुते जातः स्यादग्निदैवत्ये ॥
सुतधनपशुमान् विद्वान् दाता धीरोऽल्पवाक् स्थिरमतिश्च ।
वृषभगतिस्तेजस्वी प्राजापत्ये नरो जातः ॥]

**चपलश्चतुरो भीरुः पटुरुत्साही धनी मृगे भोगी ।**
**शठगर्वितः कृतघ्नो हिंस्रः पापश्च रौद्रर्क्षे ॥ ३ ॥**

One born under the star Mṛgaśīrṣa becomes fickle, clever, timid, eloquent, industrious, wealthy and endowed with sensual pleasures. The asterism Ārdrā makes one perfidious, haughty, (irascible), ungrateful, cruel and sinful.

[The Vārāṇaseya edition reads the second line as—शठगर्वितचण्डकृतघ्नहिंस्रपापश्च रौद्रर्क्षे ।

Vide पराशर—

प्रतिशीलरूपदृष्टः सौम्यमतिः सोद्यमः श्रुतिरहस्यः ।
चपलमतिः सुविनीतो जातः स्यादिन्दुदैवत्ये ॥
रौद्रः क्रूरः क्रोधी परदारार्थापहारशीलश्च ।
वाग्निष्ठुरोऽतिधीरो जातः स्याद् रुद्रदैवत्ये ॥]

**दान्तः सुखी सुशीलो दुर्मेधा रोगभाक् पिपासुश्च ।**
**अल्पेन च सन्तुष्टः पुनर्वसौ जायते मनुजः ॥ ४ ॥**

One born under the star Punarvasu will be self-controlled, happy, of good character, dull-witted, ailing, very thirsty and easily satisfied.

[Vide पराशर—

क्षयवृद्धिभावनायां यशांसि विदिशो भवन्ति कृच्छ्राणि ।
व्याधिबहुलो बहुसुतः पुनर्वसौ जायते मनुजः ॥]

**शान्तात्मा सुभगः पण्डितो धनी धर्मसंश्रितः पुष्ये ।**
**शठसर्वभक्षपापः कृतघ्नधूर्तश्च भौजङ्गे ॥ ५ ॥**

One born under the star Puṣya will possess a tranquil mind, amiable features, learning, affluence and attachment to meritorious deeds. The asterism Āśleṣā makes one insincere, inclined to eat everything, sinful, ungrateful and deceitful.

[Vide पराशर—

द्युतिकान्तिसत्त्वयुक्तो बहुश्रुतो दारदासधनचेष्टः ।
विपुलकुलवंशकर्ता वक्ता पुष्ये नरो जातः ॥

स्वल्पगतिर्जिह्माक्षः क्रूरः क्रोधी नरः सदामर्षः ।
दाता हन्ता भोक्ता सार्पे जातो बहुव्यसनः ॥]

**बहुभृत्यधनो भोगी सुरपितृभक्तो महोद्यमः पित्र्ये ।**
**प्रियवाग्दाता द्युतिमानटनो नृपसेवको भाग्ये ॥ ६ ॥**

A person whose birth takes place under the star Maghā will be very rich and will have many servants, will enjoy pleasures, worship the Gods and the *manes*, and be very industrious. The star Pūrvaphalgunī makes one sweet-tongued, liberal in gifts, bright in appearance, fond of wandering, and a servant of the king.

[Cf. पराशर—

पितृभक्तः क्रोधवशो मात्रा पितृयज्ञसत्त्रयाजी च ।
द्विचतुष्पदमित्राढ्यो बह्वरिमित्रो नरः पित्र्ये ॥
बहुभाग्योऽल्पापत्यः सुभगः प्रियदर्शनो नरोऽल्पधनः ।
नातिप्रबुद्धबुद्धिः परभाग्यविभुर्भवति भाग्ये ॥]

**सुभगो विद्याप्तधनो भोगी सुखभाग्द्वितीयफाल्गुन्याम् ।**
**उत्साही धृष्टः पानपोऽघृणी तस्करो हस्ते ॥ ७ ॥**

The person born under the star Uttaraphalgunī will be very popular, will earn money by his learning, will be voluptuous and happy. The star Hasta makes one industrious, impudent, fond of drinking, merciless and thievish.

[Cf. पराशर—

हयगजरथप्रयायी दाता भोक्ता विहाररतिशीलः ।
मृदुवाग्गीतरतिः स्यादार्यम्णे मानवो विद्वान् ॥
उपचितकरचरणभुजो बहुविधधनधान्यताग्रणीः सेर्ष्यः ।
धर्मार्थकामभागी हस्ते सुतवान् नरो जातः ॥]

**चित्राम्बरमाल्यधरः सुलोचनाङ्गश्च भवति चित्रायाम् ।**
**दान्तो वणिक् कृपालुः प्रियवाग्धर्माश्रितः स्वातौ ॥ ८ ॥**

Under the asterism Citrā one comes to have colourful garments and flower-garlands as well as beautiful eyes and limbs. The star Svāti makes one self-controlled, clever in trade, kind-hearted, virtuous and of pleasant speech.

[Instead of कृपालुः, तृषालुः is another reading.]

Cf. पराशर—

वेदार्थशास्त्रकुशलः पशुमानत्यन्तशिल्पकर्मा च ।
चित्राक्षश्चित्रायां सुभगश्च नरस्त्रिपुत्रश्च ॥
बहुजनभर्ता वक्ता त्रिवर्गभोक्ता प्रियो महोत्साहः ।
वामाचारोऽल्परिपुः स्वातौ जातः कुलाग्र्यश्च ॥

**ईर्ष्युर्लुब्धो द्युतिमान्वचनपटुः कलहकृद्विशाखासु ।**
**आढ्यो विदेशवासी क्षुधालुरटनोऽनुराधासु ॥ ६ ॥**

One born under Viśākhā becomes jealous, greedy, bright in appearance, clever in speech, and quarrelsome. The person born under Anurādhā becomes very wealthy, dwells in foreign lands, is unable to endure hunger and wanders from place to place.

[Cf. पराशर—

श्रीमानिज्याभिरतः प्राज्ञोऽनुपसाधुकृत् कृतार्थपतिः ।
तीक्ष्णोऽभिमानयुक्तश्चैन्द्राग्नौ ख्यातकीर्तिश्च ॥
स्थिरमित्रस्तेजस्वी सुतवानत्यन्तसौख्यभागी च ।
ज्ञातिष्ववन्ध्योऽर्थपरो जातः स्यान्मित्रदैवत्ये ॥

This sage gives only good effects for Anurādhā.]

**ज्येष्ठासु न बहुमित्रः सन्तुष्टो धर्मकृत्प्रचुरकोपः ।**
**मूले मानी धनवान् सुखी न हिंस्रः स्थिरो भोगी ॥ १० ॥**

One born in the star Jyeṣṭhā will not have many friends, will be contented, interested in meritorious deeds and exceedingly irritable. Under Mūla one becomes proud, wealthy, happy, of a gentle nature, firm-minded and luxurious in his living.

[Cf. पराशर—

ज्ञातिषु गुणेषु राजसु पूजां प्राप्नोति नाशयति शत्रून् ।
तेजोऽधिकोऽर्थभागी जातः स्यादिन्द्रदैवत्ये ॥
धनधान्याढ्यो दाता परवित्तहरो नरः कलहशीलः ।
क्रूरः परोपतापी मूले मूलोपजीवी च ॥]

**इष्टानन्दकलत्रो मानी दृढसौहृदश्च जलदैवे ।**
**वैश्वे विनीतधार्मिकबहुमित्रकृतज्ञसुभगश्च ॥ ११ ॥**

The person born under Pūrvāṣāḍhā will have an amiable and jolly wife, will be proud and firm in friendship. The star Uttarā-

ṣāḍhā will make one modest, virtuous, have many friends, grateful and attractive.

[वीरो is another reading for मानी.

Cf. पराशर—

सलिलपथकर्मसिद्धः क्लेशसहिष्णुः परस्य दारेच्छुः ।
नित्यमकल्यशरीरः प्रियमद्यः पूर्वषाढासु ॥
यानोद्यानवनरतिः प्रवाससुरतीर्थसाधुसेवी च ।
बहुशिल्पार्थः प्रियवाक् जातः स्याद्वैश्वदेवे च ॥]

**श्रीमाञ्छ्रवणे श्रुतवानुदारदारो धनान्वितः ख्यातः ।**
**दाताऽऽढ्यशूरगीतप्रियो धनिष्ठासु धनलुब्धः ॥ १२ ॥**

One born under the asterism Śravaṇa becomes learned, has a generous wife, and is possessed of wealth and fame. Star Dhaniṣṭhā makes one charitable, heroic, wealthy, greedy for money, and fond of music.

[The alliteration in the first line is pleasing. Utpala gives two explanations of उदारदारः, उदारेषु दारः and the other, the correct one. It is not clear as to what he means by the first explanation.

Cf. पराशर—

ज्ञातिश्रेष्ठो धनवान्दानरुचिर्भवति दक्षिणो दक्षः ।
नित्यमरोगशरीरः श्रवणे हतशत्रुपक्षश्च ॥
धनधान्यसञ्चयानामीशः स्यान्नृपतिसत्कृतो यज्वा ।
अक्लेशभाग् जितरिपुः श्रविष्ठयाभीष्टता(दा ?)रश्च ॥]

**स्फुटवाग्व्यसनी रिपुहा साहसिकः शतभिषक्षु दुर्ग्राह्यः ।**
**भद्रपदासूद्विग्नः स्त्रीजितधनपटुरदाता च ॥ १३ ॥**

One born in the star Śatabhiṣaj speaks clearly (or frankly), is unfortunate (or has some vice), conquers his enemies, is daring and hard to be won over. Under the star Pūrvabhadrapadā one will be unhappy, henpecked, wealthy and clever, but a miser.

[Vide पराशर—

परदारमद्यसेवी क्लेशसहो वारुणे नरो धीरः ।
स्थिरसञ्चयः स्थिरसुहृद्भिषक्क्रियापण्डितो रोगी ॥
दारुणकर्मा क्रोधी निशाचरस्तीक्ष्णविक्रमश्चपलः ।
विषमः प्रसह्य हन्ता प्राक्प्रोष्ठपदे भवति जातः ॥

The commentator interprets स्फुटवाक् as निष्ठुरभाषी—one who speaks harshly.]

**वक्ता सुखी प्रजावान् जितशत्रुर्धार्मिको द्वितीयासु ।**
**सम्पूर्णाङ्गः सुभगः शूरः शुचिरर्थवान् पौष्णे ॥ १४ ॥**

The person born under the asterism Uttarābhādra will be a good speaker, happy, blessed with children, will vanquish his enemies and be virtuous. The star Revatī makes one have a symmetrical body (a perfect body), attractive, heroic, pure and wealthy.

[Vide पराशर—

नृपसत्कृतो बहुसुतः प्रदानशीलो जले सततभीरुः ।
इज्याध्ययनरतिः स्यादाहिर्बुध्न्ये नरो जातः ॥
सर्वार्थभुक् प्रदाता प्रवासनिरतो विशुद्धकुलशीलः ।
गोमाननल्पपुत्रः पौष्णे विद्वान् नरो जातः ॥ ]

———————

## विवाहपटलम् ॥ १०३ ॥
(विन्ध्यवासिकृतम्)

*Chapter CIII—Planetary Combinations at Marriage*
(Written by Vindhyavāsin)

[This chapter is patently by another author named above. The commentator could have, however, added this chapter at the end of Chapter C, where he comments upon विवाहपटल of two verses, with the remark: "इदानीं संक्षेपेणावसरप्राप्तं विवाहपटलमाह ।" For, what is treated of in this chapter is nothing but an elaboration of the matter contained in those two verses. The reason for this must be that before our commentator, others must have seen this work with the inclusion of this Vivāhapaṭala as a separate chapter, since he notices a variant reading in verse 8 *infra.*]

मूर्तौ करोति दिनकृद्विधवां कुजश्च
राहुर्विपन्नतनयां रविजो दरिद्राम् ।
शुक्रः शशाङ्कतनयश्च गुरुश्च साध्वी-
मायुःक्षयं प्रकुरुतेऽथ विभावरीशः ॥ १ ॥

If the Sun or Mars occupy the ascendant at a marriage, the girl would become a widow; if Rāhu, she would lose her children; if Saturn, she would become penniless; if Venus, Mercury or Jupiter, she would be blessed with an ideal character; and if the Moon, her life would be cut short.

[All the verses in this chapter, except the last one which is in स्रग्धरा metre, are in the वसन्ततिलका metre.]

कुर्वन्ति भास्करशनैश्चरराहुभौमा
दारिद्र्यदुःखमतुलं नियतं द्वितीये ।
वित्तेश्वरीमविधवां गुरुशुक्रसौम्या
नारीं प्रभूततनयां कुरुते शशाङ्कः ॥ २ ॥

The Sun, Saturn, Rāhu or Mars occupying the 2nd house from the ascendant cause undoubtedly indescribable miseries arising

from poverty; while Jupiter, Venus or Mercury therein make the girl abundantly rich and have a long-lived husband. The Moon in that position confers many children on her.

सूर्येन्दुभौमगुरुशुक्रबुधास्तृतीये
कुर्युः सदा बहुसुतां धनभागिनीं च ।
व्यक्तां दिवाकरसुतः सुभगां करोति
मृत्युं ददाति नियमात् खलु सैंहिकेयः ॥ ३ ॥

The Sun, Moon, Mars, Mercury, Jupiter or Venus in the 3rd house from the ascendant make her always wealthy and blessed with many children; Saturn makes her famous, and attractive to her husband; while Rāhu invariably causes death.

स्वल्पं पयः स्रवति सूर्यसुते चतुर्थे
दौर्भाग्यमुष्णकिरणः कुरुते शशी च ।
राहुः सपत्नमपि च क्षितिजोऽल्पवित्तं
दद्याद्भृगुः सुरगुरुश्च बुधश्च सौख्यम् ॥ ४ ॥

Saturn occupying the 4th house causes scarcity of breast-milk in the bride; the Sun or the Moon in that position makes her unfortunate (i. e. disliked by the husband); Rāhu creates enemies (or a co-wife); Mars causes poverty; Venus, Jupiter or Mercury bestow happiness.

नष्टात्मजां रविकुजौ खलु पञ्चमस्थौ
चन्द्रात्मजो बहुसुतां गुरुभार्गवौ च ।
राहुर्ददाति मरणं शनिरुग्ररोगं
कन्याविनाशमचिरात्कुरुते शशाङ्कः ॥ ५ ॥

The Sun and Mars (singly or together) in the 5th house from the Lagna will certainly destroy her issue; Mercury, Jupiter and Venus bestow many children; Rāhu causes death; Saturn, a fell disease; the Moon brings about the girl's death before long.

षष्ठाश्रिताः शनिदिवाकरराहुजीवाः
कुर्युः कुजश्च सुभगां श्वशुरेषु भक्ताम् ।
चन्द्रः करोति विधवामुशना दरिद्रा-
मृद्धां शशाङ्कतनयः कलहप्रियां च ॥ ६ ॥

Saturn, the Sun, Rāhu, Jupiter and Mars occupying the 6th house make the bride beloved of her husband, and devoted to the elders (such as the father-in-law and mother-in-law); the Moon makes her a widow; Venus, penurious; and Mercury, wealthy, but fond of quarrels.

[In the 6th house five planets are beneficial, while the Moon is definitely bad, Mercury being partly favourable.]

सौरारजीवबुधराहुरवीन्दुशुक्राः
कुर्युः प्रसह्य खलु सप्तमराशिसंस्थाः ।
वैधव्यबन्धनवधक्षयमर्थनाश-
व्याधिप्रवासमरणानि यथाक्रमेण ॥ ७ ॥

Saturn, Mars, Jupiter, Mercury, Rāhu, the Sun, the Moon and Venus occupying the 7th house, cause perforce widowhood, imprisonment, destruction, decay, loss of wealth, disease, absence from home and death respectively.

[It is a well-known rule to be observed in electional astrology relating to marriage that the 7th house from the ascendant at the time of marriage must be free from planets. That is why no good effect has been given here for any planet.]

स्थानेऽष्टमे गुरुबुधौ नियतं वियोगं
मृत्युं शशी भृगुसुतश्च तथैव राहुः ।
सूर्यः करोत्यविधवां सरुजां महीजः
सूर्यात्मजो धनवतीं पतिवल्लभां च ॥ ८ ॥

Jupiter and Mercury in the 8th house cause separation between the husband and wife for certain; the Moon, Venus and Rāhu cause death; the Sun makes her predecease her husband; Mars, sickly; Saturn, wealthy and beloved of her husband.

[According to this only two planets namely the Sun and Saturn, are beneficial in the 8th house. The commentator speaks of a different reading in the third line viz. सुभगां instead of सरुजाम्.]

धर्मे स्थिता भृगुदिवाकरभूमिपुत्रा
जीवश्च धर्मनिरतां शशिजस्त्वरोगाम् ।
राहुश्च सूर्यतनयश्च करोति वन्ध्यां
कन्याप्रसूतिमटनां कुरुते शशाङ्कः ॥ ९ ॥

Venus, the Sun, Mars and Jupiter posited in the 9th house make the girl devoted to virtue or religion; Mercury gives her good health; Rāhu and Saturn make her barren; and the Moon gives her daughters and a wandering habit.

राहुर्नभःस्थलगतो विधवां करोति
पापे रतां दिनकरश्च शनैश्चरश्च ।
मृत्युं कुजोऽर्थरहितां कुलटां च चन्द्रः
शेषा ग्रहा धनवतीं सुभगां च कुर्युः ॥ १० ॥

Rāhu occupying the 10th house from the ascendant at marriage makes a girl a widow; the Sun and Saturn therein lead her to sinful activities; Mars causes death; the Moon makes her indigent and unchaste; and the others viz. Mercury, Jupiter and Venus, wealthy and beloved of the husband.

आये रविर्बहुसुतां सधनां शशाङ्कः
पुत्रान्वितां क्षितिसुतो रविजो धनाढ्याम् ।
आयुष्मतीं सुरगुरुः शशिजः समृद्धां
राहुः करोत्यविधवां भृगुरर्थयुक्ताम् ॥ ११ ॥

The Sun situated in this 11th house bestows many sons; the Moon, wealth; Mars, sons; Saturn, much wealth; Jupiter, long life; Mercury, great prosperity; Rāhu, long life on the husband; and Venus, riches.

अन्ते गुरुर्धनवतीं दिनकृद्दरिद्रां
चन्द्रो धनव्ययकरीं कुलटां च राहुः ।
साध्वीं भृगुः शशिसुतो बहुपुत्रपौत्रीं
पानप्रसक्तहृदयां रविजः कुजश्च ॥ १२ ॥

Jupiter in the 12th house confers wealth on the bride; the Sun leads to poverty; the Moon makes her a spend-thrift; Rāhu, immoral; Venus, devoted to her husband; Mercury bestows many children and grand children; Saturn and Mars make her an addict to drink.

गोपैर्यष्ट्या हतानां खुरपुटदलिता या तु धूलिर्दिनान्ते
सोद्वाहे सुन्दरीणां विपुलधनसुतारोग्यसौभाग्यकर्त्री
तस्मिन्काले न चर्क्षं न च तिथिकरणं नैव लग्नं न योगः
ख्यातः पुंसां सुखार्थं शमयति दुरितान्युत्थितं गोरजस्तु ॥ १३ ॥

The dust that is raised in the evening by the pointed hoofs of the cows beaten with sticks by the cow-herds, is favourable for the marriage of charming girls. It bestows abundant wealth, sons, sound health and husband's affection. It is not at all necessary at this time to consider the asterism, the lunar day, karaṇa, yoga and ascendant. For, the dust raised by cows is noted for giving happiness to men, as it wards off all sins.

[The results of this section can be put in a table for ready reference as shown below:

| Planets Houses | Sun | Moon | Mars | Mercury | Jupiter | Venus | Saturn | Rāhu |
|---|---|---|---|---|---|---|---|---|
| I | Widow | Short Life | Widow | Chastity | Chastity | Chastity | Poverty | Loss of children |
| II | Suffering due to poverty | Many children | Suffering due to poverty | Riches & auspiciousness | Riches & auspiciousness | Riches & auspiciousness | Suffering due to poverty | Suffering due to poverty |
| III | Many sons & wealth | Many sons & wealth | Many sons & wealth | Many sons & wealth | Many sons & wealth | Many sons & wealth | Famous & beloved of husband | Death |
| IV | Unfortunate | Unfortunate | Poverty | Happiness | Happiness | Happiness | Little milk in breasts | Enemies |
| V | Loss of children | Death soon | Loss of children | Many children | Many sons | Many children | fell disease | Death |

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| VI | Attractive & respectful to elders | Widow | Attractive & respectful to elders | Rich & quarrelsome | Attractive & respectful to elders | Poor | Attractive & respectful to elders | Attractive & respectful to elders |
| VII | Disease | Going away from home | Imprisonment | Decay | Death | Death | Widowhood | Sons of wealth |
| VIII | Long lived husband | Death | Sickly | Separation | Separation | Death | Rich & beloved of husband | Death |
| IX | Virtuous | Birth of only daughters & wandering | Virtuous | Healthy | Virtuous | Virtuous | Barren | Barren |
| X | Sinful | Poor & immoral | Death | Rich & attractive | Rich & attractive | Rich & attractive | Sinful | Widowhood |
| XI | Many sons | Rich | Many children | Rich | Long life | Wealthy | Rich | Long-lived husband |
| XII | Poor | Spendthrift | Drunkard | Many children & grand children | Rich | Chaste | Drunkard | Immoral |

## ग्रहगोचराध्यायः ॥ १०४ ॥

*Chapter CIV—Transits of Planets*

The aim of the author is to include in his work all branches of learning, though his main object is to teach astrological and allied principles. So he wants to illustrate many of the metres while expounding the effects of planetary transits. Being a great scholar endowed with a creative genius, he uses many figures of speech and introduces cleverly the names of metres, he employs, through pun. Primarily Sanskrit metres are classified under two heads viz. Vṛtta and Jāti. The former is based on groups of three syllables called Akṣara gaṇas, while the latter, upon groups of four Mātrās or syllabic instants. There are 8 Akṣaragaṇas viz. Ma, Ya, Ra, Sa, Ta, Ja, Bha and Na. They are shown below:

| | |
|---|---|
| मगणः = — — — ; आदित्यः | तगणः = — — ∪ ; विघ्नेश |
| यगणः = ∪ — — ; पिनाकः | जगणः = ∪ — ∪ ; पुरारि |
| रगणः = — ∪ — ; शङ्करः | भगणः = — ∪∪ ; भूसुर |
| सगणः = ∪ ∪ — ; सततम् | नगणः = ∪ ∪ ∪ ; गिरिश |

Here (—) stands for a long syllable, while (∪) for a short one. These Gaṇas have their own presiding deities viz. the Earth, Water, Fire, Wind, Sky, Sun, Moon and Heaven. According to Piṅgala, Antaka or Death takes the place of Wind, and Serpent instead of Heaven. Their effects in order are: Prosperity, growth, death, journey, emptiness, disease, fame and joy. The following verse gives the mutual relationship of the Gaṇas:

मनौ सखायौ कथितौ भयौ भृत्यावुदीरितौ ।
उदासीनौ तजौ प्रोक्तौ सरौ शत्रू मताविह ॥

The Jāti type of metre is based on syllabic instants. Here a Gaṇa has four syllabic instants. Among the Akṣaragaṇas there are only three viz. सगण, जगण and भगण, which have four Mātrās. In addition to these we can have नगण and one लघु. Our author is fond of the आर्या metre belonging to the Jāti group. In the ordinary variety

of this Āryā, the first and third quarters must have three groups of four Mātrās each; the second, 4 groups with a long syllable (which has two Mātrās) at the end. The fourth quarter has 15 Mātrās, distributed among four Gaṇas followed by a long syllable. In this, the third Gaṇa is represented by only one Mātrā of a short syllable. It is a rule that the odd groups ought not to have Jagaṇa (∪—∪) and the sixth (i.e. the 3rd in the second quarter) ought to have Jagaṇa or a Nagaṇa and a Laghu (∪∪∪∪). The author names here several varieties of the Āryâ viz. मुखचपला, जघनचपला, पथ्या, विपुला, चपला, वतालीय, औपच्छन्दसिक, Daṇḍakas viz. चण्डवृष्टिप्रयात, वर्णकदण्डक, समुद्रदण्डक, and 47 Vṛttas.

प्रायेण सूत्रेण विनाकृतानि प्रकाशरन्ध्राणि चिरन्तनानि ।
रत्नानि शास्त्राणि च योजितानि नवैर्गुणैर्भूषयितुं क्षमाणि ॥ १ ॥

Generally ancient gems and Śāstras (scientific works) which are without strings (i.e. unstrung) and a metrical form (respectively), whose bores are quite visible and faults apparent (as a result of obsolete words), become fit to be worn as ornaments and to be held in high esteem, when they are joined together with new strings and excellent ideas couched in fine metres (respectively).

[Here the author uses pun (Śleṣa) and Samuccayālaṁkāra. The metre is उपजाति.]

प्रायेण गोचरो व्यवहार्योऽतस्तत्फलानि वक्ष्यामि ।
नानावृत्तैरार्या मुखचपलत्वं क्षमध्वं नः ॥ २ ॥

Generally, the transit of planets comes within the purview of our daily experience. Hence I shall expound its effects, O noble scholars, in varied metres. Kindly excuse my volubility.

[Here he has introduced the name of the metre मुखचपला with pun, as it also means 'talkative'. In society people speak about their good and bad prospects accruing from the transit of the planets with reference to their natal Moon. Hence it is a very useful subject in which even ordinary persons are unusually interested. Now to understand मुखचपला type of आर्या, we have to know first what is चपला. In both the halves there should be जगण in the second and fourth places, being surrounded (i. e. preceded and followed) by Gurus or long syllables. It is arranged thus:

∪∪—, ∪—∪, — —, ∪—∪, — —, ∪—∪, — —, Long,
∪∪—, ∪—∪, — —, ∪—∪, — —, ∪, — —, Long,,

Here the Jagaṇas in II and IV places are flanked by (—)s, in both halves. Hence the name. If the first half alone follows this rule, it is called मुखचपला. Let us put the example in symbols :

— —, ∪— ∪, —∪ ∪, — —, — —, ∪— ∪, — —, Long,
— —, — —, — —, ∪∪ ∪∪, — —, ∪, — —, Long,,

The author has not followed in the first half the rules of चपला strictly, as the IV Gaṇa is not preceded by a long syllable, though it is followed by one. It is no जगण either. Here, since the first half alone is of the चपला variety and the second of the ordinary आर्या, it is termed चपला in the मुख or opening.]

**माण्डव्यगिरं श्रुत्वा न मदीया रोचतेऽथवा नैवम् ।**
**साध्वी तथा न पुंसां प्रिया यथा स्याज्जघनचपला ॥ ३ ॥**

Or, my statements on this subject will surely be liked by the learned who have heard those of Māṇḍavya. For, men do not love their devout and chaste wives so much as they do courtesans.

[It is inferred that Rāta and Māṇḍavya were the joint authors of some sacred works. They are mentioned in Piṅgala's work. Māṇḍavya is mentioned in the Baudhāyana-sūtra, Āśvalāyana-sūtra and the Mahābhārata (Ādi. 107). The commentator quotes two verses of Māṇḍavya which contain a bombastic style and appear to be modern:

सर्वेऽप्याकाशवासाः स्फटिकबिसलताशङ्खकार्पासभासा-
स्ते लग्नं वर्द्धयन्तो नरपतितिलकं तं समुत्पादयन्ति ।
यत्सेनोत्तालवाजिव्रजखुरजरजोव्याप्तमालोक्य बिम्बं
मुच्यन्ते प्रेयसीभिर्दुरनुभवनिशाशङ्कया चक्रवाकाः ॥
कौर्पैरन्यत्र मुक्ताविचकिलधवलो रोहिणीप्राणनाथः
सर्वैः संवीक्ष्यमाणः खवलयनिलयैस्तं समुत्पादयेद्धि ।
नीतं यस्य प्रगाढैर्घनमलिनमपि श्वेतिमानं यशोभि-
र्बिभ्राणा शम्भुशङ्कां मधुमथनमहो मन्दमालिङ्गति श्रीः ॥

The metre जघनचपला is so called because it is like the चपला only in the second half, the first half being like the ordinary Āryā. So this is the converse of मुखचपला. In this verse the author shows his humility in that he says that though his statements are not picturesque like a courtesan, yet being factual they would be liked by scholars.]

**सूर्यः षट्त्रिदशस्थितस्त्रिदशषट्सप्ताद्यगश्चन्द्रमा**
**जीवः सप्तनवद्विपञ्चमगतो वक्रार्कजौ षट्त्रिगौ ।**

सौम्यः षड्द्विचतुर्दशाष्टमगतः सर्वेऽप्युपान्ते शुभाः
शुक्रः सप्तमषड्दशर्क्षसहितः शार्दूलवत् त्रासकृत् ॥ ४ ॥

The Sun is beneficial in transit in the 3rd, 6th, and 10th places from a person's natal Moon; the Moon in the 1st, 3rd, 6th, 7th and 10th houses; Jupiter in the 2nd, 5th, 7th and 9th houses; Mars and Saturn in the 3rd and 6th; Mercury in the 2nd, 4th, 6th, 8th and 10th; all planets are beneficial in the 11th place. Venus causes fear (unfavourable effects) like the tiger, when he moves in the 6th, 7th, and 10th places; (in others he is auspicious).

[Sometimes the effects of good transits are not experienced by people, as they are hindered by those of Vedha (obstruction) produced by other planets. For an explanation of Vedha see this author's 'Fundamentals of Astrology' page 236. The metre of this verse is शार्दूलविक्रीडित which is defined thus: सूर्याश्वैर्मसजाः स्तताः सगुरवः शार्दूलविक्रीडितम् ।]

In the following three verses the author explains in detail the transit effects of the Sun in the 12 houses from the natal Moon.

जन्मन्यायासदोऽर्कः क्षपयति विभवान् कोष्ठरोगाध्वदाता
वित्तभ्रंशं द्वितीये दिशति च न सुखं वञ्चनां दृग्रुजं च ।
स्थानप्राप्तिं तृतीये धननिचयमुदा कल्यकृच्चारिहर्ता
रोगान्दत्ते चतुर्थे जनयति च मुहुः स्रग्धरा भोगविघ्नम् ॥ ५ ॥

The Sun passing through the sign of the natal Moon causes fatigue, reduces wealth, brings about diseases of the bowels, wealth and wearisome journeys. He causes, in the 2nd house, loss of wealth, and happiness, eye-disease and deceit. In the 3rd house, acquisition of a new position, advent of much wealth, happiness, sound health and destruction of enemies will be the result. In the 4th house, the Sun causes diseases, and constant impediments to the native in the enjoyment of conjugal happiness.

[In the second line in the place of दिशति, मनसि is another reading. This verse is in the स्रग्धरा metre which is defined as:
म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम् ।]

पीडाः स्युः पञ्चमस्थे सवितरि बहुशो रोगारिजनिताः
षष्ठेऽर्को हन्ति रोगान्क्षपयति च रिपून् शोकांश्च नुदति ।
अध्वानं सप्तमस्थो जठरगदभयं दैन्यं च कुरुते
रुक्त्रासौ चाष्टमस्थे भवति सुवदना न स्वापि वनिता ॥ ६ ॥

When the Sun passes in transit through the 5th house, there will be innumerable troubles caused by illness and enemies; through the 6th, he removes illness, enemies and grief; through the 7th, he causes wearisome travelling, diseases of the stomach, and humiliation; through the 8th, the person will suffer from illness and fright; and consequently his own wife will speak harshly to him.

[This verse is in the सुवदना metre which is defined as :
ज्ञेया सप्ताश्वषड्भिर्मरभनययुतौ भ्लौ ग: सुवदना ।]

**रवावापद्दैन्यं रुगिति नवमे वित्तचेष्टाविरोधो**
**जयं प्राप्नोत्युग्रं दशमगृहगे कर्मसिद्धिं क्रमेण ।**
**जयस्थानं मानं विभवमपि चैकादशे रोगनाशं**
**सुवृत्तानां चेष्टा भवति सफला द्वादशे नेतरेषाम् ।। ७ ।।**

The Sun in the 9th house causes danger, poverty (or humiliation), disease and impediments to acquisition of wealth and undertakings; in the 10th house, a mighty task will be completed successfully, and all the projects will be carried to success. In the 11th house, the native will attain an illustrious position, honour, wealth and freedom from disease. When the Sun passes through the 12th house, the activities of only those of an ideal character will be successful and not of others.

[Cf. the following regarding good results accruing to the virtuous:—

मङ्गलाचारयुक्तानां नित्यं च प्रयतात्मनाम् ।
जपतां जुह्वतां चैव विनिपातो विनश्यते ।।

Vide the फलदीपिका XXVI. 50.

Vide also यवनेश्वर—

हृद्रोगशोकाध्वविवाहदैन्यक्रोधक्षयव्याधिभयातिदोषान् ।
स्थाने शशाङ्कस्य रवि: करोति व्यर्थश्रमोद्वेगमपि द्वितीये ।।
तृतीयसंस्थो धनमानधर्मस्थानासनप्रीतिसुखप्रदोऽर्क: ।
चतुर्थगस्तु क्षतजप्रवृत्तिर्ज्वरामयो भेदविवादकारी ।।
नृपावमर्दात्मजबन्धुशोकव्याधिप्रद: पञ्चमसंस्थितोऽर्क: ।
आरोग्यसौख्यारिविनाशहर्षख्यातिक्रियासिद्धिकरश्च षष्ठ: ।।
जामित्रसंस्थो रुधिरप्रवृत्तिज्वरक्लमाजीर्णविषाध्वकारी ।
सूर्योऽष्टमे स्त्रीसुतबन्धुदु:खव्याधिप्रदोपद्रवमृत्युकृत्स्यात् ।।
दैन्यस्थितिभ्रंशगुरुस्वबन्धुप्रद्वेषकृत् स्यान्नवगाश्रितोऽर्क: ।
मेषूरणस्थो द्विचतुष्पदस्त्रीहिरण्यरौप्याम्बरलाभकर्ता ।।

एकादशे स्थानयश:प्रहर्षमिष्टाशनारोग्यसुखप्रदोऽर्क:
स्थाने निरुक्तं शशिनो विधिज्ञै: क्रियाफलाधातकृदन्त्यराशौ ।।

The metre of the verse is सुवृत्ता which is defined thus: यमौ न्सौ रौ गश्चेद् द्विरसमुनिभि: स्याद्विरामै: सुवृत्ता ।

It is also known as मेघविस्फूर्जिता, according to the Vṛttaratnākara, which defines it thus:

रसर्त्वश्वैर्म्यौ न्सौ ररगुरुयुतौ मेघविस्फूर्जिता ।]

**शशी जन्मन्यन्नप्रवरचयनाच्छादनकरो**
**द्वितीये मानार्थान् ग्लपयति सविघ्नश्च भवति ।**
**तृतीये वस्त्रस्त्रीधनविजयसौख्यानि लभते**
**चतुर्थेऽविश्वास: शिखरिणि भुजङ्गेन सदृश: ।।८।।**

When the Moon passes through the natal sign, one gets excellent food, couches and clothes; through the second house, one loses honour and wealth, and experiences obstacles; through the 3rd, one gets garments, damsels (or conjugal falicity), wealth, success and happiness; through the 4th house, one loses trust in others. as in a mountain infested with snakes.

[The poet introduces a simile combined with pun. The metre is शिखरिणी which is defined thus:

रसै रुद्रैश्छिन्ना यमनसभला ग: शिखरिणी ।]

**दैन्यं व्याधिं शुचमपि शशी पञ्चमे मार्गविघ्नं**
**षष्ठे वित्तं जनयति सुखं शत्रुरोगक्षयं च ।**
**यानं मानं शयनमशनं सप्तमे वित्तलाभं**
**मन्दाक्रान्ते फणिनि हिमगौ चाष्टमे भीर्न कस्य ।।९।।**

The Moon passing through the 5th house brings about humiliation, illness, grief and obstruction to journey; through the 6th, confers wealth and happiness, and destroys enemies and diseases; through the 7th, confers vehicles, honour, couches, food and money. Whoever is not frightened when the Moon is in the 8th house, as when a snake is accidentally trodden upon ?

[Here too he uses pun and Samuccayālaṁkāra. The metre is मन्दाक्रान्ता which is defined thus:

मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौ ताद्गुरू चेत् ।]

**नवमगृहगो बन्धोद्वेगश्रमोदररोगकृद्**
**दशमभवने चाज्ञाकर्मप्रसिद्धिकर: शशी ।**

**उपचयसुहृत्संयोगार्थप्रमोदमुपान्त्यगो**
**वृषभचरितान्दोषानन्त्ये करोति च सव्ययान् ॥१०॥**

The Moon in the 9th house causes imprisonment, agony, weariness and stomach diseases; in the 10th, she confers a position of authority and accomplishment of one's objects; in the 11th, prosperity, association with friends, riches and joy; in the 12th, causes expenses and blemishes caused by one's own foolishness, as in the case of a bull (which spoils both its hoofs and horns by striking the earth etc).

[The metre is called वृषभचरित or हरिणी, which is defined thus : वृषभचरितं न्सौ म्रौ स्लौ गो रसोदधिसप्तकैः । or रसयुगहयैर्न्सौ म्रौ स्लौ गो यदा हरिणी तदा ।

Vide यवनेश्वर—

स्वस्थानगो भोजनगन्धमाल्यनारीसुहृद्वस्त्ररतिप्रदः स्यात् ।
चन्द्रो द्वितीयर्क्षगतस्तु तस्माद् बहुव्ययायासविवादकारी ॥
तृतीयगो वस्त्रहिरण्ययोषित्सुहृद्यशोभोजनदो हिमांशुः ।
स्वबन्धुपीडाधननाशजानि कुर्वीत दुःखानि चतुर्थसंस्थः ॥
धनक्षयाजीर्णरुगध्वदैन्यविक्षोभकृत् पञ्चमगः शशाङ्कः ।
शत्रुक्षयारोग्यसुखार्थसिद्धिं स्निग्धागमप्रीतिकरश्च षष्ठः ॥
जामित्रगः स्त्रीजनबन्धुशय्याहिरण्यभोज्याम्बरदः शशाङ्कः ।
क्षुद्व्याधिचिन्ताकलहार्थनाशो मृत्युक्षयोपद्रवदोऽष्टमस्थः ॥
धनक्षयारिव्ययमानभङ्गरोगादिकारी नवमः शशाङ्कः ।
मेषूरणस्थो बहुमानहर्षचेष्टाफलौदार्यविरोधकारी ॥
एकादशः स्निग्धविवाहशय्यास्त्रीभोजनप्राप्तिसुखार्थकारी ।
निशाकरो द्वादशगस्तु दैन्यमालस्यमीर्ष्योपचयं च कुर्यात् ॥]

**कुजेऽभिघातः प्रथमे द्वितीये नरेन्द्रपीडाकलहारिदोषैः ।**
**भृशं च पित्तानलचौररोगैरुपेन्द्रवज्रप्रतिमोऽपि यः स्यात ॥११॥**

Mars passing through the natal sign causes bodily affliction; through the second sign, trouble from the king and enemies, quarrels, excessive biliousness, fire accidents, robbery and disease, though the person may be like Upendra (Viṣṇu) or the thunderbolt.

[The person may be as great as Indra's younger brother or his chief weapon. The metre is called उपेन्द्रवज्रा, defined thus:

उपेन्द्रवज्रा तु जतौ जगौ गः ।]

**तृतीयगश्चौरकुमारकेभ्यो भौमः सकाशात्फलमादधाति ।**
**प्रदीप्तिमाज्ञां धनमौर्णिकानि धात्वाकराख्यानि किलापराणि ॥१२॥**

Mars in the 3rd confers benefits through thieves and urchins, energy, authority, wealth, woollen articles, mineral wealth and the like.

[This verse is in the उपजाति metre which is a combination of the इन्द्रवज्रा and उपेन्द्रवज्रा. In this the first Gaṇa of the feet may be both जगण and तगण.]

भवति धरणिजे चतुर्थगे ज्वरजठरगदासृगुद्भवः ।
कुपुरुषजनिताच्च सङ्गमात्प्रसभमपि करोति चाशुभम् ।।१३।।

Mars in the 4th causes fever, stomach ailments and bleeding as well as great harm through the association with the wicked.

[The metre is called प्रसभ which is defined thus: प्रसभमपि ननौ रलौ गरुः । In the Vṛttaratnākara it is called सुभद्रिका or चन्द्रिका.]

रिपुगदकोपभयानि पञ्चमे तनयकृताश्च शुचो महीसुते ।
द्युतिरपि नास्य चिरं भवेत् स्थिरा शिरसि कपेरिव मालती यथा ।।१४।।

Mars in the 5th causes enmity, anger, illness, fear, grief on account of children, and a quick loss of energy like the tossing of a jasmine wreath from the head of a monkey.

[The metre is called मालती which is defined thus:
भवति नजावथ मालती जरौ ।]

रिपुभयकलहैर्विवर्जितः सकनकविद्रुमताम्रकागमः ।
रिपुभवनगते महीसुते किमपरवक्त्रविकारमीक्षते ।।१५।।

When Mars passes through the 6th house, one will be free from danger from enemies, (or from enemies and fear) as well as quarrels; one will also get gold, corals and copper, so that one may hold one's head aloft (i.e. one need not look for signs of others' pleasure and pain).

[The metre is called अपरवक्त्र which is defined as : अयुजि ननरला गुरुः समे तदपरवक्त्रमिदं नजौ जरौ । This is an अर्धसमवृत्त where the odd feet have 11 syllables, while the even ones 12.]

कलत्रकलहाक्षिरुग्जठररोगकृत्सप्तमे
क्षरत्क्षतजरूक्षितः क्षपितवित्तमानोऽष्टमे ।
कुजे नवमसंस्थिते परिभवार्थनाशादिभि-
र्विलम्बितगतिर्भवत्यबलदेहधातुक्लमैः ।।१६।।

Mars in the 7th house causes quarrels with one's wife, eye-disease and stomach-ailment; in the 8th, makes the native weak through bleeding, and lose wealth and honour; in the 9th house, suffer insults, loss of wealth and impeded gait owing to the loss of bodily fluids and consequent weakness.

[The Dhātus are mentioned in the following line:

वसाऽसृग्मांसमेदोऽस्थिमज्जाशुक्राणि धातवः ।

The metre is called विलम्बितगति which is defined thus: विलम्बितगतिर्जसौ जसयलैर्गयुक्तैर्भवेत् । The same is called पृथ्वी in the V. Ratnākara.]

**दशमगृहगते समं महीजे विविधधनाप्तिरुपान्त्यगे जयश्च ।**
**जनपदमुपरि स्थितश्च भुङ्क्ते वनमिव षट्चरणः सुपुष्पिताग्रम् ॥१७॥**

Mars in the 10th house produces neutral effects; in the 11th, confers various types of riches as well as success, and enables one to exercise power and authority over the country, just as the bee has free movements and enjoyment in a forest of abundant flowers.

[The metre is called पुष्पिताग्रा of the अर्धसमवृत्त group and is defined thus : अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा ।]

**नानाव्ययैर्द्वादशगे महीसुते सन्ताप्यतेऽनर्थशतैश्च मानवः ।**
**स्त्रीकोपपित्तैश्च सनेत्रवेदनैर्योऽपीन्द्रवंशाभिजनेन गर्वितः ॥१८॥**

Mars in the 12th house tortures a person with expenditure on various counts, innumerable disasters, wrath of women (or wife), bilious affections and eye-trouble, though he may be proud of his being a scion of Indra.

[The metre is called इन्द्रवंशा which is defined thus: 'स्यादिन्द्रवंशा ततजै-रसंयुतैः ।' This is just like वंशस्थ with the difference that here we have a long initial syllable instead of the short one.

Vide यवनेश्वर—

नृपानलव्यालविषाग्निशस्त्रव्याध्यर्थनाशी क्षयभङ्गकारी ।
भौमः शशिस्थानगतो द्वितीये त्वनर्थसूयामिषवञ्चनाकृत् ॥
ऐश्वर्यमानद्युतिहर्षकारी तृतीयसंस्थोऽन्नसुवर्णदश्च ।
चतुर्थगस्तूदररुग्जरासृक्प्रवृत्तिनिर्वेदकरो धराजः ॥
मृतार्थनाशक्षतवैरमोषव्याधिप्रदः पञ्चमराशिसंस्थः ।
षष्ठे कुजेऽरिक्षयमानहर्षप्रख्यापनारोग्यसमृद्धिकारी ॥
जामित्रसंस्थो धनमित्रनाशक्लेशोदराक्ष्यामयरोगकृत्स्यात् ।
भौमेऽष्टमे रुग्विषशत्रुशस्त्रक्षतक्षयोपद्रवदैन्यकारी ॥

शस्त्रक्षताक्षेमसुवर्णनाशखेदाध्वकारी नवमो महीजः ।
मेषूरणे व्याध्यरिशस्त्रचौरव्रणातिकृत् सिद्धिकरश्च पश्चात् ॥
मानात्मजाज्ञाक्षितिताम्रहेमद्युतिप्रदो रुद्रपदेऽरिजिच्च ।
स्त्रीविग्रहोद्वेजनपादरोगस्वप्नावभङ्गश्रमदः कुजोऽन्त्ये ॥]

**दुष्टवाक्यपिशुनाहितभेदैर्बन्धनैः सकलहैश्च हृतस्वः ।**
**जन्मगे शशिसुते पथि गच्छन् स्वागतेऽपि कुशलं न शृणोति ॥१९॥**

When Mercury passes through the first sign in transit, a man will be deprived of his wealth by wicked persons (using foul language), tale-bearers, enemies, duplicity, imprisonment and quarrels, and he will not hear even a kind word of welcome in his travels.

[The metre is स्वागता whose definition is—

स्वागतेति रनभाद् गुरुयुग्मम् ।]

**परिभवो धनगते धनलब्धिः सहजगे शशिसुते सुहृदाप्तिः ।**
**नृपतिशत्रुभयशङ्कितचित्तो द्रुतपदं व्रजति दुश्चरितैः स्वैः ॥२०॥**

When Mercury passes through the 2nd house, one will suffer humiliation, but acquire wealth; when he travels through the 3rd, one will have new friends, will be afraid of the king and enemies and will run away as a result of his own wicked deeds.

[The metre is द्रुतपद which is defined thus:

द्रुतपदं नभजयैः कथितं तत् ।]

**चतुर्थगे स्वजनकुटुम्बवृद्धयो धनागमो भवति च शीतरश्मिजे ।**
**सुतस्थिते तनयकलत्रविग्रहो निषेवते न च रुचिरामपि स्त्रियम् ॥२१॥**

During Mercury's transit through the 4th house the person's kinsmen and family will prosper, and he will gain wealth; through the 5th house, the native will have quarrels with his wife and sons and will not be able to enjoy even his charming wife.

[The metre is रुचिरा, defined thus:

जभौ सजौ गिति रुचिरा चतुर्ग्रहैः ।]

**सौभाग्यं विजयमथोन्नतिं च षष्ठे वैवर्ण्यं कलहमतीव सप्तमे ज्ञः ।**
**मृत्युस्थे जयसुतवस्त्रवित्तलाभा नैपुण्यं भवति मतिप्रहर्षणीयम् ॥२२॥**

During Mercury's transit through the 6th house the person concerned gets popularity, victory and rise; through the 7th sign,

he loses his lustre and has frequent quarrels; through the 8th, he will have gains, success, children, clothes, money and skill that brings joy to his heart.

[The metre is प्रहर्षणीय defined thus:

म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षणीयम् ।]

**विघ्नकरो नवमः शशिपुत्रः कर्मगतो रिपुहा धनदश्च ।**
**सप्रमदं शयनं च विधत्ते तद्गृहदोऽथ कथां स्तरणं च ॥२३॥**

When Mercury passes through the 9th house, he creates obstacles to all undertakings; through the 10th house, destroys the enemies and bestows wealth, a beautiful damsel on a couch, her house property, sweet words and sheets.

[In the place of कथां स्तरणं there is another reading viz. कुथास्तरणं which means—the rug that is spread on the elephant's back. The metre is दोधक, defined thus: – 'दोधकवृत्तमिदं भभभाद्गुः ।' The name of the metre is cleverly introduced in the verse by means of verbal pun or Mudrālaṅkāra.]

**धनसुतसुखयोषिन्मित्रवाहाप्तितुष्टि-**
**स्तुहिनकिरणपुत्रे लाभगे मृष्टवाक्यः ।**
**रिपुपरिभवरोगैः पीडितो द्वादशस्थे**
**न सहति परिभोक्तुं मालिनीयोगसौख्यम् ॥२४॥**

When Mercury passes in transit through the 11th house, the native will be jubilant with the attainment of wealth, sons, happiness, wife, friends and vehicles; he will also speak sweetly and pleasantly; when his transit takes place through the 12th house, the person will be troubled by enemies, insults and diseases, and consequently he will not be able to enjoy the pleasure of union with his bedecked beloved.

[Here for the sake of metre the author has forsaken the grammatical rule regarding the root Sah which is Ātmanepadin. He could have put it thus : प्रभवति न हि भोक्तुं . . . The metre is मालिनी, defined thus : ननमयययुतेयं मालिनी भोगिलोकैः ।

Vide यवनेश्वर—

स्थाने शशाङ्कस्य शशाङ्कसूनुः सौभाग्यविद्यामतिमानहर्ता ।
द्वितीयसंस्थस्त्वपवादशोकस्वैरक्रियामन्वतिदैन्यकारी ॥
तृतीयगो बन्धुविरोधरोधव्यापत्तिकर्ता द्रविणस्य सौम्यः ।
चतुर्थगो मानगुणप्रशंसाप्रमोदयोषिद्धनलाभकारी ॥

